॥ श्रीः ॥

॥ नमो राघवाय ॥

अथ महाकविमहामहोपाध्यायश्रीचित्रकूटतुलसीपीठाधीश्वरजगद्गुरुरामानन्दाचार्य-
स्वामिरामभद्राचार्यप्रणीतं श्रीरघुनाथशतकं प्रारभ्यते ।

॥ शार्दूलविक्रीडितम् ॥

श्रीसीताननचारुचन्द्रचटुलोऽचञ्चञ्चकोरप्रभो
सीतानेत्रचकोरपार्वणविधो विश्वेन्द्र विश्वग्विभो ।
सीतासत्प्रियया सहैव विलसत्कोट्यश्वमेधिन्हरे
सीताश्री रघुनाथ राम रमसे श्रीचित्रकूटेऽवधे ॥ १ ॥
आनन्दात्मतनुं विकाररहितां ब्रह्मस्वरूपां शुभां
सच्चित्सौख्यमयीमपास्तसमलां गुण्यां सुपुण्यां सदा ।
घ्नन्तीमुत्पलशक्ररत्नवनमुक्तापिच्छदूर्वामदं
मूर्तिं श्रीरघुनाथ राजसि वहन्सन्मानसेष्वन्वहम् ॥ २ ॥
नीलेन्दीवरकान्तया कमनया लावण्यलक्ष्मीपुषा
सीतालोचनभृङ्गजुष्टसुषमामाध्व्या सदा सौम्यया ।
दीव्यद्देवतयेव लब्धपदया श्रीसन्मनोमन्दिरे
मूर्त्या श्रीरघुनाथ मूर्छयसि वै कोटीर्मनोजन्मनाम् ॥ ३ ॥
कौसल्यासुकृताब्धिसोमसुषमां माधुर्यमन्दाकिनीं
माहेयीसुमनोमहोमहमहीं सौन्दर्यसारच्छविम् ।
रम्यां लोचनपुत्तलीं दशरथस्याजेर्मनोदेवतां
मूर्तिं स्वां रघुनाथ मद्दृगतिथिं कारुण्यतस्तां कृणु ॥ ४ ॥
यामिन्दीवरसौभगां भगवतीं नेत्रैस्त्रिभिर्धूर्जटि-
र्दीपैर्दीपितभक्तिभिर्वितनुते नीराजयन्मङ्गलम् ।
श्यामा पारमहंससिद्धिगरिमा कारुण्यकादम्बिनी
सा मूर्ती रघुनाथ मूर्छयतु मे कामादिकांस्तावकी ॥ ५ ॥
शाश्वद्धर्मसुविग्रहा पदजुषां सङ्कल्पितानुग्रहा
वेधोविश्वविलक्षणा गुणचणा वात्सल्यवार्धिः शुचिः ।
सीतानेत्रयुगप्रपा कृतकृपा पापापहा पापिनां
देयात्कं रघुनाथ नाथितमला मूर्तिस्तव श्यामला ॥ ६ ॥
ब्रह्मानन्दघना प्रसन्नवदना सम्पुष्टनिष्किञ्चना
भक्तिश्रीसदना कृपामृतधना संस्वर्धुनी धन्विनी ।
तूणीरेषुधनुर्धरा करकरा वात्सल्यधाराधरा
मूर्तिस्ते रघुनाथ मङ्गलमयी जूर्तिं बलाद्धन्तु मे ॥ ७ ॥

भास्वन्मूर्ध्नि हिरण्यहेमगुजयप्रख्यं सुमौलिं वहन्
धत्से माकरकुण्डले श्रवणयोर्हारं हरं वक्षसि ।
पाणौ बाणशरासने कटितटे पीताम्बरं स्वेषुधी
नूनं ते रघुनाथ भूषणधृतिस्तेषां रुचो वृद्धये ॥ ८ ॥
न्यस्तानर्थवरूथतः कथमिमेऽनर्थान्विहन्युर्बलात्
सौन्दर्यामृतसागरे कथममी दध्युश्छवेर्विप्रुषः ।
आधिक्यं किमु तन्यतां निरधिके तस्मादपार्थाः समे
नूनं स्वं रघुनाथ धातुमनसो बाभान्ति ते विग्रहे ॥ ९ ॥

॥ वंशस्थम् ॥

जयत्यशेषैनसतूलपावको महापराधाऽहिजताक्ष्र्यशावकः ।
सुरद्रुमारामसमोऽभिकामतविवैद्यवर्णं रघुनाथ नाम ते ॥ १० ॥
जयत्यजेयं द्विभुजं जरज्वरं गुणाकरं निर्गुणमीड्यमैश्वरम् ।
पयोजपाथोजसरोजसुन्दरं वरं नृरूपं रघुनाथ तेऽजरम् ॥ ११ ॥
जयन्ति संसारसमुद्रसेतवः स्वलोकलीलाः स्वसुखैकहेतवः ।
कुपातकालातकधूमकेतवः श्रुतीड्यगाथा रघुनाथ हे तव ॥ १२ ॥
जयत्यघौघौघविनाशचातुरीत्वराकमानन्दमयं सुचिन्मयम् ।
सदात्मकं ब्रह्मविभूति राम ते निरामयं श्रीरघुनाथ धाम ते ॥ १३ ॥
जयन्ति जाग्रज्जनदिष्टसत्पथाः सदैव मर्यादितमानवप्रथाः ।
पुराणरामायणगा गतव्यथाः श्लथत्च्छलथाः श्रीरघुनाथ ते कथाः ॥ १४ ॥
जयन्ति रामायणकोटिकोटिषु श्रुतानि गीतानि मुनीन्द्रसूरिभिः ।
चरन्ति चैत्यं चरितानि सेविनां पुनन्ति पापं रघुनाथ तेऽनघ ॥ १५ ॥
जयत्यदभ्रं शतकोटिविस्तृतं सुरम्यरामायणमादिकाव्यकम् ।
सदैव वाल्मीकिमुखेन्दुसोमकं जगत्त्रये ते रघुनाथ शाश्वतम् ॥ १६ ॥
जयत्यदो रामचरित्रमानसं सुरामगाथाशतकोटिसारभृत् ।
दलं तुलस्यास्तुलसीरितं यथा सदानवद्यं रघुनाथ तेऽमलम् ॥ १७ ॥
जयत्यनल्पाघविनाशकारिणी विहारिणी सज्जनमानसाजिरे ।
प्रहीणगङ्गाशुचिता शुचिप्रिया सदैव कीर्ती रघुनाथ तेऽनघा ॥ १८ ॥

॥ वसन्ततिलका ॥

सीतामुखाम्बुरुहमञ्जुलचञ्चरीकं सीताहृदम्बुरुहपावनपुण्डरीकम् ।
सीताकराम्बुरुहलालितमव्यलीकं सीतापतिं रघुपतिं रघुनाथमीडे ॥ १९ ॥
सैरध्वजीनयनचातकवारिवाहं सौन्दर्यसारजितमन्मथकोटिकोटिम् ।
माधुर्यधुर्यमपराजितमप्रमेयं वन्देऽनवद्यचरितं रघुनाथमीशम् ॥ २० ॥

शृङ्गारसारसरसीभवचित्रभानुं भास्वत्कुलाम्बुरुहभास्वरचित्रभानुम् ।
उद्दण्डचण्डतरचण्डनचित्रभानुं नाथं प्रणौमि रघुनाथमनाथनाथम् ॥ २१ ॥
इन्दीवराम्बुधरनीलमणिप्रकाशं कन्दर्पदर्पदलनाद्भुतकम्रकान्तिम् ।
कान्तालकं ललितहासमुदारकीर्तिं श्रीशर्वरीशवदनं रघुनाथमीडे ॥ २२ ॥
दन्तप्रभाविजितदाडिमबीजराजिं राजीवलोचनमघौघविमोचनञ्च ।
कोदण्डमण्डितकरं श्रितचण्डकाण्डं यामो वयं हि शरणं रघुनाथमाद्यम् ॥ २३ ॥
प्रातर्दिवाकरकरोपमपीतवस्त्रं वक्षोलसत्तुलसिकावनमालमीशम् ।
आजानुबाहुमजपौत्रसुतेन्दुराहुं तं वै व्रजामि शरणं रघुनाथमार्यम् ॥ २४ ॥
श्रीजाह्नवीकरणकारणकारणाङ्घ्रिपाथोरुहं मुनिवधूदुरितघ्नपादम् ।
लोकेश्वरं जनकनन्दिनीपूतपाणिपद्मं व्रजामि शरणं रघुनाथमेनम् ॥ २५ ॥
हे हेमशैलतनुमारुतिमोदकारिन् हे हेमपर्वतनिषण्णमनोविहारिन् ।
हे हेमभूषणशरासनबाणधारिन् क्षिप्रं सनाथय जनं रघुनाथ राम ॥ २६ ॥
त्वत्पादपद्ममकरन्दमधुव्रतो हि स्वप्नेऽपि नैव लभते भवतो नकारम् ।
तन्मां वसिष्ठकुलजं किल याचमानं मा मां निराशय हरे रघुनाथ भिक्षुम् ॥ २७ ॥

॥ वैतालिकम् ॥

नवनीलतमालसुन्दरं सुभगं भीमभवाब्धिमन्दरम् ।
दशकन्धरशत्रुमन्वहं रघुनाथं शरणं समाश्रये ॥ २८ ॥
शरणं करवाणि सादरं सरलं सर्वहितैषिणं हरिम् ।
शरणागतवत्सलं प्रभुं रघुनाथं तमनाथसंश्रयम् ॥ २९ ॥
शरणागतवज्रपञ्जरं शरणं सर्वनृणां समाश्रयम् ।
शरणागतरक्षणव्रतं शरणं श्रीरघुनाथमाश्रये ॥ ३० ॥
शरणं शरणामि शाश्वतं मरणत्रं शरणैषुणां नृणाम् ।
करुणं कलकञ्जलोचनं रघुनाथं नरनाथविग्रहम् ॥ ३१ ॥
न धनं न बलं न बान्धवा न हि माता न पिता न वा सुहृत् ।
निरुपाय उदस्तसम्बलो रघुनाथं शरणं श्रयाम्यहम् ॥ ३२ ॥
न जपो न तपो न साधनं नहि विद्या न विचारणा शुभा ।
कुगतिं कुमतिं च मादृशं रघुनाथाव जनं जनार्दन ॥ ३३ ॥
रघुनाथ कृपा हि तावकी सुरवल्लीसदृशी श्रुतौ श्रुता ।
किमहो मम भाग्यविप्लवात्कृपणा सा निरपत्रपाभवत् ॥ ३४ ॥
गणिकाशबरीजटायुषो विमला यत्र सरित्यथाभवन् ।
मयि सा रघुनाथ केन ते करुणा देवधुनी न्यशोषि भो ॥ ३५ ॥
न हि मादृश एनसां निधिर्न भवादृक्करुणानिधिः क्वचित् ।
विधिदत्तमिदं ह्यनन्वयं रघुनाथाव न नाथ्यतां जनः ॥ ३६ ॥

॥ शिखरिणी ॥

स्मरं कञ्जं गुञ्जं मधुपमरविन्दं जलधरं
ललामं सौत्रामं गगनमविजातोयमुडुपम् ।
हरिं हारं हारं हरतनयहारं हरिधनुः
कविं जीवं सौम्यं जयति रघुनाथोऽधिकुधरम् ॥ ३७ ॥

दधानस्तूणीरं धनुरथ गभीरस्वनमयं
प्रकाण्डं वैकाण्डं दलितदशकण्ठाटविवनम् ।
वसानः कौशेयं बलमपरिमेयं विलसयन्
घनश्यामो रामो जयति रघुनाथोऽधिकुधरम् ॥ ३८ ॥

विधुः श्रीकौसल्यासुजठरपयोधेर्गुणनिधि-
र्दशास्याब्धेरौर्वो दशरथमखापूर्वमनघः ।
तमालाभो लाभो धृतमधुरमूर्तिर्दृशिमतां
स्वमर्यादातन्तून्वयति रघुनाथोऽधिकुधरम् ॥ ३९ ॥

कृपासिन्धुर्बन्धुर्विनतजनतानां हरहरो
हरिर्हृष्टः पुष्टः सततमथ सीतासहचरः ।
महात्मा पूतात्मा प्रथितपरमात्मा पदजुषां
नृणां दोषान्दूरं नयति रघुनाथोऽधिकुधरम् ॥ ४० ॥

जुषाणः श्रीसीतावदनवनरुक्सारममलं
पुषाणः पार्थिव्याः परमरसराड्भावमनघम् ।
मुषाणो माहेयी मनसिजततं लक्ष्मणसखो
वरो वै वैदेह्या वसति रघुनाथोऽधिकुधरम् ॥ ४१ ॥

वपुः स्वीकुर्वाणः शुभदगुणरत्नाकरमहो
लसत्स्वेच्छारूपं क्षपितभवकूपं परमया ।
मया युक्तो मुक्तोचितविगतमायोऽपकरणो
जयन्कामं रामो लसति रघुनाथोऽधिकुधरम् ॥ ४२ ॥

क्वचित्सीतावक्षोरुहकलशपाटीररचना
रसं शन्तन्वानो विलसितविधानो रसपतेः ।
समञ्चन् शृङ्गारं प्रथितमुपहारं महिभुवो-
रहो रासं रासं रसति रघुनाथोऽधिकुधरम् ॥ ४३ ॥

कुटीरे वानीरे विधुविमलनीरे सुसरितः
सुतीरे सद्धीरे शिशिरितसमीरे तृणमये ।
विराजन् राजन्यो भुवनकुलधन्योऽवनिजया
प्रपन्नेषु प्रेष्ठो द्रवति रघुनाथोऽधिकुधरम् ॥ ४४ ॥

कृपादृष्ट्या वृष्ट्या कलितसुखसृष्ट्या त्रिजगतां
तुदंस्तापं पापं भवभयकलापं कलपदैः ।
भवानीजानीष्टो विबुधविनतेष्टो निजगिरा
जनानन्दस्यन्दं च्यवति रघुनाथोऽधिकुधरम् ॥ ४५ ॥

॥ पुष्पिताग्रा ॥
अभिनववनमुक्ततमालनीलं निगममनुष्वभिगीतसौम्यशीलम् ।
जनकनृपसुतावरं वरार्हं शरणमहं रघुनाथमेमि भक्त्यै ॥ ४६ ॥
मनसिजशतकोटिकाम्यकान्तिं मनसिजशत्रुनिसृष्टशिष्टशान्तिम् ।
मनसिजतततप्ततापतान्तिं मनसिजकं रघुनाथमाश्रयामि ॥ ४७ ॥
करुणमनसमद्भुतस्वभावं प्रणतजनावनदीक्षमार्तरक्षम् ।
रघुकुलकुमुदेन्दुमीश्वरेशं शरणमहं रघुनाथमाव्रजामि ॥ ४८ ॥
भवदवदहनेन दह्यमानो विपिनकरीव करालकालकाल्यः ।
हरिणतृषिकृशः कुलौल्यलोभः शरणमये रघुनाथसत्तटागम् ॥ ४९ ॥
विषयविषभुजङ्गदष्टसत्त्वो मदनमनोरथभूतकाभिभूतः ।
मरणभयत आतुरो मुमुक्षुः शरणमये रघुनाथगारुडीकम् ॥ ५० ॥
जहि जहि रघुनाथ वासनाहिं न कुरु विलम्बमनाथनाथ केकिन् ।
त्वयि खलु विमुखे सुबाहुशत्रौ हरिशिशुमेनमशिष्यतीह भेकः ॥ ५१ ॥
नहि मम जपयागयोगशक्तिर्न खलु समाधिविधौ च मे प्रतीतिः ।
गतदृश इव यष्टिरार्तबन्धो त्वमसि सदा रघुनाथ मेऽवलम्बः ॥ ५२ ॥
जगति जनिमतामवमाननाढ्यः शुनक इवास्मि कुटुम्बतो निरस्तः ।
कलिकलिलगतो यथा जरद्गौ खनमहं रघुनाथतोऽप्यपेक्षे ॥ ५३ ॥
गुणगणजलधे कृपैकमूर्ते भुवनपते प्रणतैककामपूर्ते ।
रघुवर वरणीयशीलसिन्धो स्वजनमिमं रघुनाथ पाह्यनाथम् ॥ ५४ ॥

॥ उपेन्द्रवज्रा ॥
तव स्वभावो रघुनाथ ईदृग्गृहीतरागा रिपवोऽपि यत्र ।
न बद्धवैरोऽपि दशाननस्त्वां कदापि निन्दास्पदमाततान ॥ ५५ ॥
न कोऽपि मित्रं नहि कोऽपि शत्रुस्तवत्त्रिलोक्यां रघुनाथ राम ।
अतो जगौ श्रीकविकोकिलोऽपि मुहू रिपूणामपि वत्सलं त्वाम् ॥ ५६ ॥
वहन्नकेकान्प्रतिलोमलोकांस्तथापि मातुः पयसि स्पृहावान् ।
ध्रुवं स्वभावो रघुनाथ तेऽयमणोरणीयस्त्वमयप्रकाशः ॥ ५७ ॥
समस्तलोकेश्वरलोकपाला यदाज्ञया स्वं चरितार्थयन्ति ।
स एव गाधेयवशंवदोऽभूत्स कस्स्वभावो रघुनाथ चित्रम् ॥ ५८ ॥

त्वदीयपादाब्जरजोऽभिमर्शाद्बभूव पूता ह्यघवत्यहल्या ।
तथापि पश्चात्तपसेऽभिमृश्य पदस्पृशे त्वं रघुनाथ पापम् ॥ ५९ ॥
निरागसोऽप्याह विवासनं ते पिता समात्रा परिणोदितः सन् ।
तथापि नो विव्यथिषे न निन्दां चकर्थ रुष्टो रघुनाथ मातुः ॥ ६० ॥
चकार पापं जडधीर्जयन्तो बिभेद चञ्च्वा चरणौ कुजायाः ।
तथापि नो रोषवशं जगन्थ कियान्मृदुस्त्वं रघुनाथ शीलात् ॥ ६१ ॥
विहाय राज्यं सुरदुर्लभं त्वं सुवर्णमायामृगमन्वधावः ।
न वेद यत्नादपि ते स्वभावं स्वभीष्टनाकं रघुनाथ वाकम् ॥ ६२ ॥
बबन्ध पौलस्त्यसुतावमेहो भवन्तमुग्रैः किल नागपाशैः ।
भवानपीमं प्रजिघाय नाकं कियद्विचित्रं रघुनाथशीलम् ॥ ६३ ॥

॥ इन्द्रवज्रा ॥

ये नाम जप्त्वा मुनयो दुरन्तं संसारबन्धं तरसा तुदन्ति ।
स त्वं कथं शक्रजिता निबद्धः कीदृक्स्वभावो रघुनाथ तेऽयम् ॥ ६४ ॥
यत्पादपङ्केरुहसेवया वै सर्वज्ञतां यान्ति मुनीन्द्रवर्याः ।
मूढो यथा शत्रुमृतेरुपायं पृच्छस्यहो श्रीरघुनाथ मित्रम् ॥ ६५ ॥
सीतागतिं भो रघुनाथ पृच्छस्येणादिकानज्ञवदार्तचित्तः ।
मुक्तिं कथं रासि जटायुषे वै कीदृग्विरोधीव तव स्वभावः ॥ ६६ ॥
सूर्यस्य सूर्यस्य हि सौरिमित्रं विष्णोश्च विष्णोः कपयः सहायाः ।
लक्ष्म्याश्च लक्ष्म्याः रघुनाथ कष्टं सर्वं स्वभावस्य समञ्जसं ते ॥ ६७ ॥
सीता विराजत्यथ मानसे ते लङ्कां तथापि प्रहिणोषि वातिम् ।
नूनं लघून्वर्धयितुं तवेष्टा चेष्टा विशिष्टा रघुनाथदृष्टा ॥ ६८ ॥
सङ्कल्पतो यस्य विरञ्चिसर्गो जाग्रज्जगत्यां यश आतनोति ।
स त्वं कथं शोषयितुं समुद्रं सन्धातुमैच्छो रघुनाथ बाणम् ॥ ६९ ॥
दुर्वार्यकालोऽस्ति धनुर्यदीयं संवत्सरात्मा यदमोघबाणः ।
स त्वं कथं राक्षसनाशनाय निर्देष्टुमैक्षो रघुनाथ कीशान् ॥ ७० ॥
नूनं स्वभावो रघुनाथ तेऽसौ सङ्क्रीडसे यल्लघुभिश्च कीशैः ।
मित्रे च सुग्रीवविभीषणौ ते पुत्रो वयः श्रीहनुमांस्त्वदीयः ॥ ७१ ॥
तं ते स्वभावं परितो निशम्य श्रुत्वा त्वदीयाञ्च दयालुताम्भो ।
त्वन्निष्ठचित्तः शरणं प्रपद्ये त्वमातुरं मां रघुनाथ रक्ष ॥ ७२ ॥

॥ उपजातिः ॥

यत्सच्चिदानन्दवपुर्बिभर्षि स्वप्रीतये श्रीरघुनाथ रम्यम् ।
तदेव दृष्ट्वा प्रतिबिम्बभावे मुग्धो नरीनर्त्सि कियद्विचित्रम् ॥ ७३ ॥

न मोदसे त्वं पदपद्मधूल्या पापामहल्यामपि तारयित्वा ।
चेखिद्यसे वै रघुनाथ तत्के पादस्पृशे कीदृगहो स्वभावः ॥ ७४ ॥
विभज्य चापं तृणभञ्जमाजेर्न वा स्म दर्पं रघुनाथ यासि ।
स्वयंवरे जानकिजैत्रमालां गृह्णासि नम्रो विनयः कियांस्ते ॥ ७५ ॥
कुठारपाणेः परुषाक्षराणि स्वीकृत्य वाक्यानि यथाशिषस्त्वम् ।
न रोषमागाः कृतपादपूजो लोकातिगं ते रघुनाथ शीलम् ॥ ७६ ॥
गुहं निगूहन्भरतन्भुजाभ्यां चकर्थ मित्रं ननु मित्रमित्रः ।
स्वपादपाथोजमरन्दतोयं कैवर्तकेभ्यो रघुनाथ रासि ॥ ७७ ॥
चकार यद्यप्यहितं प्रियायाः काकायमानो जडधीर्जयन्तः ।
तथापि तस्मै ददिथासुदानं विलक्षणं ते रघुनाथ शीलम् ॥ ७८ ॥
पितुः क्रियायां भरतं नियुज्य जटायुषः श्राद्धमहो चकर्थ ।
तस्मै ह्यदाः स्वीयगतिं च भक्तिं कीदृक्स्वभावो रघुनाथ तेऽसौ ॥ ७९ ॥
अम्बात्रये जागृति वत्सलाढ्ये यद्भिल्लभामां जननीमकार्षीः ।
इदं हि ते श्रीरघुनाथ नूनं दिव्यस्वभावानुगणं चरित्रम् ॥ ८० ॥
स्वयं समर्थोऽतिरथोऽपि वीरः सुग्रीवमुख्यांश्च विभीषणं च ।
चकर्थ मित्राणि निजान्सहायान्तदेव ते श्रीरघुनाथ शीलम् ॥ ८१ ॥

॥ इन्द्रवंशा ॥

तं ते स्वभावं परिमृश्य शत्रुहन्संसारसिन्धौ पतितोऽतिपामरः ।
पापी प्रपद्ये तव पादपल्लवं दीनानुकम्पिन् रघुनाथ रक्ष माम् ॥ ८२ ॥
यद्यप्यहं जातु जडोऽतिजाल्मको मायापिशाची परिभूतसत्वकः ।
किन्तु त्वमप्यार्तिहरो हरार्चितस्तस्मात्प्रपन्नं रघुनाथ पाहि माम् ॥ ८३ ॥
नैवास्ति मादृग्भुवनेषु पातकी त्वादृक्च नैवास्ति जगत्स्वघापहः ।
इत्यावयोर्ब्रह्मकृतं ह्यनन्वयं त्रायस्व यत्नाद्रघुनाथ मा त्यज ॥ ८४ ॥
जानन्नपि स्वं दुरितैकसागरं वात्सल्यवार्धिंश्च भवन्तमीश्वरम् ।
त्यक्त्वा त्रपां त्वां शरणं समाश्रये नूनं व्रतं नो रघुनाथ हास्यसे ॥ ८५ ॥
यस्यां कृपादेवसरित्यनेकशः क्रूरान्नृशंसान्प्रपुनासि पापिनः ।
तस्यां कथं पापशिरोमणिं हि मां पूतं विधातुं रघुनाथ लज्जसे ॥ ८६ ॥
एकत्र गर्जन्कलिकालकुञ्जरो मद्बुद्धिवल्लीं प्रसभं जिघत्सति ।
अन्यत्र मामाधिप्रियं पिशाचिनी नेतुं विनाशं रघुनाथ नाथते ॥ ८७ ॥
यद्यप्यहं क्रूरकुकर्मपापभुग्दण्ड्यो भवेयं नहि नाथ विस्मयः ।
किन्तु त्वदङ्घ्रौ पतितस्य पीडया लोकापवादो रघुनाथ ते भवेत् ॥ ८८ ॥
कामं व्रजेयं नरकेष्वनेकधा पापच्यमानः कटुकर्मजाग्निना ।
किन्तु त्वदङ्घ्र्यम्बुजभावनासवो मा मानसान्मे रघुनाथ हीयताम् ॥ ८९ ॥

मा याहि दूरं पतितं पुनीहि भो मा धेहि धीमन् जनदूषणं हृदि ।
मा देहि दीनं कलये कदाचन मा पाहि पापं रघुनाथ पाहि माम् ॥ ९० ॥

॥ द्रुतविलम्बितः ॥

मरकताम्बुजवारिदसुन्दरं समरकर्कशकाण्डधनुर्धरम् ।
विगतकल्मषदिव्यगुणाकरं तमधुना रघुनाथमहं भजे ॥ ९१ ॥
कमललोचनमाधिविमोचनं जलजरोचनरोचनरोचनम् ।
कुधरशोचनशोचनशोचनं तमधुना रघुनाथमुपाश्रये ॥ ९२ ॥
परमकारुणिकं करुणार्णवं नवलनीरदनीरजविग्रहम् ।
दशरथात्मजमात्तधनुश्शरं शरणदं रघुनाथहं श्रये ॥ ९३ ॥
जनकजाननचन्द्रचकोरकं भरतमाधिहरं भरताग्रजम् ।
ललितलक्ष्मणलालितलालसं तमनिशं रघुनाथमहं भजे ॥ ९४ ॥
महितमारुतिमञ्जुलमानसं महितमारुतिमञ्जुलमानसम् ।
महितमारुतिमञ्जुलमानसं तमनघं रघुनाथमुपब्रुवे ॥ ९५ ॥
भवभवं शरणागतवत्सलं भवभवं शरणागतवत्सलम् ।
भवभवं शरणागतवत्सलं तममलं रघुनाथमहं श्रये ॥ ९६ ॥
जनकजामहितं महिताहितं जनकजामहितं महिताहितम् ।
जनकजामहितं महिताहितं सुखकरं रघुनाथमहं गृणे ॥ ९७ ॥
हरिमहं रघुनाथमिमं भजे हरिमहं रघुनाथमिमं भजे ।
हरिमहं रघुनाथमिमं भजे हरिमहं रघुनाथमिमं भजे ॥ ९८ ॥
हरिमयं रघुनाथमुपास्महे हरिमयं रघुनाथमुपास्महे ।
हरिमयं रघुनाथमुपास्महे हरिमयं रघुनाथमुपास्महे ॥ ९९ ॥

॥ रथोद्धता ॥

नीलकञ्जनवकञ्जसुन्दरं भीमदुस्तरभवाब्धिमन्दरम् ।
सर्वसद्गुणमनोज्ञमन्दिरं भावयामि रघुनाथमादरात् ॥ १०० ॥
शाङ्र्गसायकनिषङ्गधारिणं सत्प्रपन्नभवभीतिहारिणम् ।
मैथिलीमहमनोविहारिणं मानयामि रघुनाथमन्वहम् ॥ १०१ ॥
ताटकासुभुजदर्पहारिणं कौशिकाध्वरविकासकारिणम् ।
ऐश्वरेण मुनिदारतारिणं तं सदैव रघुनाथमाश्रये ॥ १०२ ॥
वीरमीश्वरपिनाकभञ्जनं भार्गवेन्द्रमदगर्वगञ्जनम् ।
जानकीजयमशेषरञ्जनं राममेव रघुनाथमाद्रिये ॥ १०३ ॥

चित्रकूटशुचिशैलवासिनं जानकीहृदयसद्मकासिनम् ।
तापसं हरिसुतैकशासिनं राममत्र रघुनाथमेम्यहम् ॥ १०४ ॥
जानकीशमविवंशभूषणं भग्नघोरखरमस्तदूषणम् ।
एणनाशनमनर्घ्यपूषणं चिन्तयामि रघुनाथमीश्वरम् ॥ १०५ ॥
शीलतुष्टशबरीजटायुषं भावपुष्टहनुमद्वनायुषम् ।
रावणान्तकविभीषणायुषं रामभद्ररघुनाथमीड्महे ॥ १०६ ॥
रामभद्रचरणाम्बुजं श्रये रामभद्रमनिशं समाद्रिये ।
राघवेन्द्रसुगुणावलीं ब्रुवे राघवं च रघुनाथमाह्वये ॥ १०७ ॥
रामचन्द्रचरणाब्जकिङ्करं जानकीचरणचारुचारणम् ।
गिर्धरं गिरिधरं गिरापते दर्शनेन रघुनाथ नाथय ॥ १०८ ॥

इति श्रीरघुनाथस्य शतकं देवभाषया ।
श्रीरामभद्राचार्येण गीतं स्यात्तुष्टये श्रियः ॥

॥ श्रीसीतारामार्पणमस्तु ॥

इति श्रीतुलसीपीठाधीश्वरजगद्गुरुरामानन्दाचार्यस्वामिरामभद्राचार्यप्रणीतं
श्रीरघुनाथशतकं सम्पूर्णम् ।
॥ श्रीराघवः शन्तनोतु ॥